# ।। दिवङ्गतेभ्यश्श्री-स्वरूपानन्दसरस्वती-महाराजेभ्यश्श्रद्धाञ्जलिः ।।





## ब्रह्मलीन शङ्कराचार्य स्वामिश्री स्वरूपानन्द सरस्वती जी महाराज के लिए संस्कृत-पद्यात्मक श्रद्धाञ्जलि

- डॉ.हिमांशुगौड़

||दिवङ्गतेभ्यश्श्रीस्वरूपानन्दसरस्वतीमहाराजेभ्यश्श्रद्धाञ्जलिः ||

............

द्वैताद्वैतपथैश्च साङ्ख्यशरणैर्नैयायिकैश्शाब्दिकैर्
देवप्रार्थनतत्परैश्शिवरतैः पौराणिकैरन्वहं
वेदोल्लासितमानसैरपि च यो मीमांसकैर्वन्दितस्
सोऽयं शङ्करतां गतश्शिवगृहं श्रीमत्स्वरूपाभिधः||१||

जीवेम क्व वयं भवद्भिरहिता याम क्व दुःखाहताः
किं वा निश्श्वसिमोऽपि विश्वसिम उद्भ्रान्ता इव स्मोऽधुना
हा हा हन्त विहाय धर्मनगरीसम्राड्गतो भूतलात्
स्वामिश्रीकरपात्रदीक्षितगुरुश्श्रीमत्स्वरूपाभिधः||२||

चत्वारस्सकलेऽपि भारत इह भ्राजन्त उत्कर्षदा
आद्याच्छङ्करपादपूज्यपदकाञ्चीर्णा सुखानाम्प्रथा
सोऽसौ पीठयुगे विराजितवपुर्धर्मश्रियोद्भ्राजितश्
शैवं लोकमगाद्विहाय पृथिवीं पूज्यस्स्वरूपो गुरुः||३||

विद्वान्सो बहवो निशादिनमहो येनात्र सम्पोषिताः
धूर्ताः म्लेच्छजनाश्च धर्मनगराद् दूरीकृता येन च
बुद्ध्यातङ्कभृतां विनश्य च भयं, धर्मश्च संस्थापितस्
सोऽयं वेदवतां वरो दिवमगात्स्वामी स्वरूपाभिधः||४||

धिग्धिग्धिग् वयमद्य स्वात्मपुरुषान्पूज्यांश्च विस्मृत्य हा

वित्तार्थं च पिशाचराजपदवीं यामो ह्यलज्जान्विता:
रे रे वेदपुराणधारिपुरुषा: देवार्चनासंरता:!
सोऽस्मद्धर्मगुरुर्गतो दिवमितस्तस्मै क्षणं दत्त व:||५||

वादान् कुत्सितमानसांश्च मलिनान् योऽध्वंसयद्वै द्विषां
श्रद्धाश्रीपरिशोभितान् स्वपुषा हास्येन योऽवर्धयत्
वीक्ष्यैनं सकलास्समाजफलका हृष्यन्ति धर्मप्रियास्
सोऽसौ देवपुरं प्रयात इति नश्शान्तिर्न चित्तेऽधुना||६||

देहो नाम पदं जनिश्च मरणं सर्वं ह्यसत्यं मृषा
वैराग्येण विलोकयन्ति सुजनास्तद्ब्रह्म साक्षादिव
किन्त्वस्मादृशलोकजालनिगडाबद्धास्तु दु:खाकुला
स्वामिश्रीगणभूषणश्शिवपुरं यातो विहायैहिकम्||७||

हा हा हा ध्वनिरद्य सर्वधरणीं व्यापृत्य चैवं नभस्
संश्रूयेत सुरैरपि स्वपुरि तैर्हस्तस्थपुष्पैरहो
मोदस्तत्र, भुवीह दु:खमिति संव्यग्रा: सुरा मानुषा
यातायातभृतो दिवि प्रभवताद्वैमानिकस् सत्पथ:||८||

शब्दार्थं परिपाठयन्द्विजगणान्वेदार्थमुद्बोधयन्
शास्त्रार्थं परिकारयन् बुधजने सत्यार्थमुत्पादयन्
शैवार्थं परिदर्शयन् जगति यो दिव्यार्थमुद्भासयन्
देवार्थं गतवान् दिवं गुरुरसौ श्रीमान्स्वरूपाभिध:||९||

पुण्यापुण्यविवेकशीलपुरुषैर्यो निश्चयार्थं चित:
सत्यासत्यसमुत्सुकैर्जनवरैर्यो वेदनार्थं श्रित:
ज्ञाताज्ञातबहुप्रकारकमलध्वंसाय यो ध्रीयते
सोऽसौ धर्मभृतां सतां सुखकरो ब्रह्मत्वपन्नोऽधुना||१०||

रज्जौ सर्प इति भ्रमाद्भवति यो बुद्धौ नृणां भावना
तद्वद्ब्रह्मणि लोकदर्शनमिति ज्ञायेत तत्त्वप्रियै:
इत्याकारकसत्यरूपपदकादर्शी प्रकर्षी गुणैर्
गीर्वाणालयमुच्चकासत इतो गत्वा स्वरूपो गुरु:||११||

श्रद्धां गाणपते कुरुध्वमधुना बुद्ध्यै स्वशुद्ध्यै जना:!
वृद्धिं तर्हि समश्नुत प्रतिपदं तत्पादपूजारता:!
इत्याद्यादिसुरेशदेशपदकप्रीतिश्रियाम्प्रेरकं
वन्दे घ्राणरसादिदोषरहितं स्वर्वासिनं सद्गुरुम्||१२||

"हेमन्त: प्रभवेच्छरद्विकसति प्रावृट् च संवर्षति
ग्रीष्मस्तापयति प्रियश्च नितरां बाभात्यहो शारद:
वासन्तं रमणं सुखं" - "नहि सखे! गृह्णाति मृत्युश्शिरष्
षड्भिर्नात्मविमुग्धिमेहि" - वदति स्म श्रीस्वरूपो गुरु:||१३||

लोको भीतिकरो गृहं क्व मम चेत्याच्छन्नचित्तो भवेत्
यात्रा क्वैतु समाप्तिमित्यथ जनस्सञ्चिन्त्य विष्णुं भजेत्

कौटिल्यं भयदं जगन्न सुखदं यानि क्व चिन्तान्वित:
आत्मान्वेषणतत्परो भव सदा - श्रीमत्स्वरूपोऽवदत्||१४||

"पुत्रस्स्त्री गृहमर्थमस्तु सुजना:! लेशं न नो वास्तवं
मृत्यौ नैव तृणं सहैति जगतश्चेत्येव सन्धार्यताम्
भेकस्सर्पमुखस्थितोऽसि रमसे संसारचक्रे कथं"
रात्रौ यो वदति स्म चिन्तनवशात् सोऽसौ स्वरूपो गुरु:||१५||

******

हिमांशुगौड:
०९:५१ रात्रौ
११/०९/२०२२

